# संस्कृतवार्ताः

दिनांक 0४-११-२०२०

प्रातः ०६:५५

प्रातस्तन्यो वार्ताः

प्रवाचकोऽनुवादकश्च पुरुषोत्तमः शर्मा

मुख्य वार्ता:

# बिहार विधानसभा निर्वाचने अद्य तृतीय चरणाय प्रचाराभियानं सजवं विधीयते।

# भारते कोविड-संक्रमणात् स्वास्थ्य लाभमितः सङ्ख्या द्विनवति प्रतिशतमिता संवृत्ता।

# प्रशासनेनोक्तं यत् जीरो कोर्ट सञ्चय बैङ्क-लेखासु सेवाशुल्कं नैव स्थापयिष्यते।

# अमेरिकायां राष्ट्रपतिपदस्य निर्वाचनाय मतदानम् सम्पन्नम्।

अपि च
आई. पी. एल. क्रिकेट स्पर्धा मालिकायां गतरात्रौ क्रीडिता स्पर्धा सनराजर्स हैदराबाद दलेन विजिता।

# बिहारविधान सभा निर्वाचनेभ्यः तृतीयचरणाय राजनीतिकदलैः प्रचाराभियानं सजवं विधीयते। तृतीयचरणाय मतदानं शनिवासरे आयोजयिष्यते। अस्मिन् चरणे पञ्चदश जनपदानाम् अष्ट-सप्तातिः विधान सभा क्षेत्रेषु मतदानम् भविष्यति। राजनीतिकदलानां नेतारः मतदातृन् आकर्षयितुं सर्वतोदृशा प्रयत्नशीलाः विद्यन्ते। उपनिर्वाचनायुक्तः उमेश सिन्हा प्रावोचत यत् विगतेहनि बिहार-विधानसभानिर्वाचनेभ्यः द्वितीयचरणात्मकं मतदानम् अथ च दश राज्यानां चतुर्पञ्चाशत आसनेभ्यः उपनिर्वाचनाय मतदानं शान्तिपूर्णकं सञ्जातम्।

भारते कोविड-सङ्क्रमणात् स्वास्थ्यलाभस्थितिः अनुदिनं समेधमाना वर्तते। इदानीं स्वास्थ्यलाभ-प्रतिशतता एकनवतिः प्रतिशतमिता सञ्जाता। सम्प्रति संक्रमण प्रसार मितिः चतुःदशमलव चतुः प्रतिशतमिता वर्तते। स्वास्थ्य मन्त्रालयेन प्रोक्तं यत् इदानीं यावत् षड्सप्तति लक्षाधिक जनाः आरोग्यं प्राप्तवन्तः। भारतीयायुर्विज्ञानानुसंधान-परिषदा प्रतिपादितं यत् विगते अहोरात्रे भारते षट्चत्वारिंशत् सहस्रोत्तर दश लक्ष परीक्षणानि अभवन्।

प्रशासनेन स्पष्टीकृतं यत् जन धन बैङ्कलेखाः समेत्य षष्टि कोटि सञ्चय बैङ्कलेखासु सेवा-शुल्कं नैव विद्यते। वित्त मन्त्रालयेन प्रोक्तं यत् सञ्चार माध्यमेषु प्रसार्यते यत् सार्वजनिकक्षेत्रस्य बैङ्क समवायैः सेवा शुल्कं संवर्धितं तद् विवरणमिदं असत्यं वर्तते। भारतीय रिज़र्व बैङ्कस्य निर्देशानुगुणं सार्वजनिकक्षेत्रस्य बैङ्क समवायेभ्यः निजसेवासु पारदर्शिता पूर्वकं शुल्कविधानस्यानुमतिः विद्यते, परं कोविड् सङ्क्रमणं निध्याय सम्प्रति शुल्कवृद्धेः प्रस्तावो नैव वर्तते।

छत्तीसगढस्य बस्तरक्षेत्रस्य बीजापुर जनपदे आरक्षिभिः एकस्मिन् सङ्घर्षे एको माओवादी व्यापादितः। घटनास्थलात् आरक्षिभिः भुशुण्डि द्वयं समेत्य विस्फोटकान्यपि अधिगतानि। समेव बीजापुर जनपदस्य जंगलक्षेत्रे केन्द्रीय-रक्षिता रक्षि बलेन चत्वारो माओवादिनः निगडिताः। एकस्याम् अन्य घटनायां बस्तरक्षेत्रस्य जनजातीय प्रदेशे दश माओवादिभिः दन्तेवाडा जनपदस्य आरक्षाधीक्षकस्य समक्षम् आत्मसमर्पणं कृतम्। एतेषु पञ्चवादिषु पुरस्कारघोषणा

अमेरिकायां राष्ट्रपति पदस्य निर्वाचनाय मतदानं पूर्णताङ्गतम्। कोविड-संक्रमण प्रसारावधौ अमेरिकायां षट्चत्वारिंशे राष्ट्रपतये निर्वाचन-प्रक्रिया सत्यैव सम्पन्ना। मतगणनानन्तरं परिणामोद्घोषणा भविष्यति। ६

आई-पी. एल क्रिकेट स्पर्धा मालिकायां गतरात्रौ क्रीडितायां रोमाञ्चक स्पर्धायां सनराइजर्स हैदराबाद दलेन मुम्बई इण्डियन्स दलं पराजितम्। प्रथमं क्रीडयता मुम्बई इण्डियन्स दलेन अष्टक्रीडकाणां हानौ नवचत्वारिंशदुत्तरैकशतं धावनाङ्कलक्ष्यं स्थापितम्। लक्ष्यमनुसरता सनराइजर्स हैदराबाद दलेन दश क्रीडकाणां सुरक्षापूर्वकं विजयो ऽधिगतः। स्पर्धा मालिकायाम् अद्य मुम्बई इण्डियन्स दलं दिल्ली कैपिटल्स दलं सम्मुखी करिष्यति।